SAPTHAGIRI (SANSKRIT)
ILLUSTRATED MONTHLY
Volume:9, Issue:4
July-2022, Price Rs.5/-
No. of pages-24



तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

सचित्रमासपत्रिका

जूलै, २०२२ रू/- ५/-







तिरुमल, श्रीस्वामिनः
आणिवर आस्थानम्
१७-०७-२०२२



आन्ध्रप्रदेशस्य अमरावतौ 'वेङ्कटपालेम्' समीपे ति.ति.दे पक्षतः निर्मिते श्रीवेङ्कटेश्वरस्वामिनः आलये जून् ५ तः ९ पर्यन्तम् आलयमहासम्प्रोक्षणकार्यक्रमः सम्पन्नः। तत्र च शारदापीठाधिपतयः श्री श्री श्री स्वरूपानन्देन्द्रसरस्वती स्वामिनः, उत्तराधिकारिणः श्री श्री श्री स्वात्मानन्देन्द्रसरस्वती स्वामिनः, आन्ध्रप्रदेशस्य राज्यपालाः श्री विश्वभूषण् हरिचन्द्रन्, देवादायशाखामन्त्रिणः श्री कोट्टु सत्यनारायणः, ति.ति.दे. पालकमण्डल्यध्यक्षाः श्री वै.वी.सुब्बारेड्डि, तदितराधिकारिणः च भागिनः अभवन्।













# गीतामृतम्



सङ्करो नरकायैव कुलघ्नानां कुलस्य च।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः।। (भगवद्गीता ४०/१)

अर्जुनः श्रीकृष्णं प्रति वदति, ''हे माधव युद्धे मदीयपितृपुत्रादिमरणानन्तरं स्त्रियः दुष्टाः भवन्ति। वर्णसाङ्कर्यमपि सम्भवति। तेन कारणेन तेषां कुलघ्नानां कुलमेव नरकं याति। तस्मात् एषां सङ्कीर्णकुलानां पितरः लुप्तपिण्डोदकक्रियाः अर्थात् पितृश्राद्धादिविरहिताः सन्तः अधः पतन्ति। अतः युद्धं न कर्तुमिच्छामि'' इति।

## सङ्कीर्तनम्

श्रीहरि नित्य शेषगिरीश
मोहनाकार मुकुन्द नमो श्रीहरि
देवकीसुत देववामन
गोविन्दा गोपगोपीनाथा श्रीहरि ।।श्रीहरि।।

गोवर्धनधर गोकुलपालक
देवेशाधिक ते नमो नमो ।।श्रीहरि।।

सामजान (व) न सारंग (शार्ङ्ग) पाणि
वामना कृष्ण वासुदेवा श्रीहरि
राम नाम नारायण विष्णो
दामोदर श्रीधर नमो नमो ।।श्रीहरि।।

पुरुषोत्तम पुण्डरीकाक्ष
गरुडध्वज करुणानिधि श्रीहरि
चिरंतनाच्युत श्रीवेङ्कटेश
नरमृग ते नमो नमो ।।श्रीहरि।।

(अन्नमाचार्यसङ्कीर्तनम्)



# कृतकं त्यजाम




कृतकं (Plastic) विना प्रपञ्चः अग्रे चलति वा? न शक्यते प्रायः इत्यस्ति किल! यत्किमपि क्रीणातुं गत्वा क्रीतं सर्वं आनयामः कृतकस्यूतेषु स्थापयित्वा। अतः तानि त्यक्त्वा एकं दिनमपि जीवितुं शक्नुमो वा? शाकेभ्य आरभ्य भोजनादिनयनपर्यन्तं सर्वमपि सरलतया कतकस्यूतेषु एव नयामः। तदा शाकादिना सार्धं स्यूतमपि गृहमायाति। ततः तस्य स्वेच्छाविहारः आरभ्यते। मार्गमध्ये, व्यर्थपदार्थकलापेषु, सरोवरेषु, नदीषु, समुद्रतीरेषु च सर्वतः कृतकस्यूतानि एव! तानि च मृदि, अग्नौ वा लीनानि न भवन्ति किन्तु सहस्रं वर्षाणि यावत् भूमौ स्वरूपेणैव तिष्ठन्ति, स्थित्वा पर्यावरणम् अनूह्यतया कलुषितं कुर्वन्ति।

गतेषु त्रिंशतिः वर्षेषु भूप्रपञ्चः अत्यन्तं कलुषितः अनेन कृतकेन (Plastic) इति पर्यावरणविदः ब्रुवन्ति। तस्य उपयोगेन प्रकृतिसम्बद्धाः औषधांशदयः नश्यन्ति। भूमेः, जलस्य च कल्मषात् प्राणहानिः भवति। पश्यामः खलु! नगरेषु गावः, श्वानादयः व्यर्थकलापसमीपे कृतकस्यूतैः साकं त्यक्तान् पदार्थान् भुक्त्वा मृताः भवन्ति इति।

कृतकस्यूतानां नागरिकजलप्रलयानां च सम्बन्धो वर्तते। उपयुक्तानां कृतकस्यूतानां इतस्ततः यत्रकुत्रापि क्षेपणेन तानि गत्वा व्यर्थजलप्रवाहकेन्द्रेषु जलप्रवाहस्य प्रतिबन्धकत्वेन भवन्ति। ततः जलं तस्य मार्गं त्यक्त्वा सर्वत्र यथेष्टं चरति, स एव खलु जलप्रलयो नाम। एवञ्च कृतकस्यूतानि अस्मभ्यं सौलभ्यं यावत् यच्छन्ति, ततोप्यधिकतया कष्टमपि यच्छन्ति।

पूर्वोक्तानंशान् परिगणिता अस्माकं राष्ट्रस्य देवादायशाखा, इतःपरं देवालयेषु कृतकवस्तूनाम् उपयोगः न भवेत् इति आशयेन वर्तते। तत्र जलकूपान् (Plastic) कृतकस्यूतेषु आनीतपूजासामग्रीं च अलये प्रवेशयितुं न अनुमन्यते। तथैव आलयस्य अनुबन्धापणेषु अपि कृतकस्यूतादीनां निषेधः क्रियते। प्राथमिकदशायां जूलै प्रथमदिनाङ्गात् आरभ्य प्रधानालयेषु सर्वेषु कृतकवस्तुविनियोगस्य निषेधः विधीयते।

तिरुमलक्षेत्रे गतसंवत्सरात् कृतकवस्तूनां विनियोगः सम्पूर्णतया निषिद्धः। तिरुमलदेवस्थाने इव इतरप्रधानालयेषु च शुद्धजलवितरणाय कार्यं क्रियते। आन्ध्रप्रदेशस्य मान्यमुख्यमन्त्रिवर्याः श्री वै.यस्.जगन्मोहन् रेड्डि, देवादायशाखाकार्यक्रमेषु अस्मिन् वत्सरे 'मे' मासे समीक्षां कृतवन्तः। तदङ्गतया ति.ति.देवस्थाने विद्यमानाः समुचितप्रणालीः सर्वेषु अलयेषु सर्वत्र कार्यरूपेण भवेयुरिति स्पष्टम् आदिदिशुः।

कृतकविनियोगनिषेधेन ति.ति.देवस्थानस्य या प्रतिष्ठा लब्धा तस्याः उत्तरोत्तराभिवृद्धिस्तु न केवलं अधिकारिवर्गहस्ते, अपि तु भक्तानां हस्तेऽपि वर्तते।

झटिति अस्माकं जीवनविधाने कृतकस्यानुपयोगः न आयाति चेदपि कालक्रमेण तेषां उपयोगः त्यक्तव्य एव। हस्ते एकं वस्त्रनिर्मितं स्यूतं स्वीकृत्य गन्तुं प्रयत्नः विधेयः। कृतकस्य उपयोगेन पर्यावरणस्य महती हानिरस्ति, तद्द्वारा अस्माकं जीवनमपि क्लिष्टं भवति इति हेतोः तात्कालिकसौलभ्यानि त्यक्त्वा पर्यावरणरक्षणद्वारा अस्माकं रक्षणे च कृतावगमाः भूत्वा चलाम।

तिरुमल-तिरुपतिदेवस्थानानां सचित्रमासपत्रिका

सम्पुटिः-०९ सञ्चिका-०४

# जूलै २०२२

श्रीशुभकृत्संवत्सरस्य आषाढशुक्लद्वितीयातः
श्रीशुभकृत्संवत्सरस्य श्रावणशुक्लतृतीयापर्यन्तम् - १९४३

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*





**मुखचित्रम् –** श्रीश्रीनिवासस्य आणिवर आस्थानम्, तिरुमल।

**अन्तिमरक्षापुटः –** श्रीभूसमेतकल्याणवेङ्कटेश्वरः श्रीनिवासमङ्गापुरम्।

# सप्तगिरिः


गौरवसम्पादकः:-
श्री ए.वी.धर्मारेड्डि I.D.E.S.,
कार्यनिर्वहणाधिकारी (F.A.C.), ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः:
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे.मुद्रणालयः,
तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.





**सङ्केतः**

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org



एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-



# वर्धतां धर्मनिलयः

- वि.प्रदीपकुमारः
चरवाणी - ९४९१६४६५३२

जगदनिमित्तबन्धुः श्रीमान् कृष्णपरमात्मा स्वभक्तशिरोमणिम् उद्धवं श्रेयोभागिनं कर्तुं तं निमित्तीकृत्य अखिललोककवासिनः सज्ञानान् प्रत्यपि बहुविधमेधोरञ्चकान् विषयानुपदिदेश। सैवोपदेशः अद्यापि भूतले ''उद्धवगीता'' इति नाम्ना शोभते।

तत्र भगवद्रूप-गुणानां विषये विशदविचारः श्रूयते। तन्मनसि निधाय यत्किञ्चित् उच्यते। श्रीमद्भागवते परमात्मा 'निर्गुणः - निराकारः'' इत्यादिबोधकानि वाक्यानि नाना दृश्यन्ते चेदपि भगवतः रूपमेव नास्ति, गुणाः एव न सन्ति तस्मिन् इति तेषां नार्थः। किन्तु प्राकृतगुणो वा रूपं वा नास्तीत्येवार्थः। यतः चषकस्थं जलं चषकरूपं, घटस्थं घटाकृतिं यथा स्वीकुरुते; तथा एकोऽपि परमात्मा विभुः विविधवस्तुषु तत्तदाकृतीः स्वीकृत्य तदात्मकतया विराजते।

एवं चेत् सर्वत्र व्याप्तः हरिः कुतो वा जलवन्न दृश्यते? चेत् स दृश्यते।

**अग्नौ क्रियावतां विष्णुः योगिनां हृदये हरिः।**
**प्रतिमास्वप्रबुद्धानां सर्वत्र विदितात्मनाम्॥**

श्रीहरिः सामान्यजनानां प्रत्यक्षे साक्षात् नैव विषयो भवति किन्तु प्रतिमारूपेणैव (विग्रहरूपेणैव)। कर्मयोगिनां अग्नौ, योगिनां तु स्वहृदये, विदितवेद्यानाम् अपरोक्षज्ञानिनां च सर्वत्र प्रत्यक्षगोचरः इत्यर्थः।

किञ्च यन्न प्रत्यक्षगोचरायते तन्नास्तीत्येव केचन ब्रुवन्ति। तदविवेकवचनमेव भवति नान्यत्। यतः आधुनिकप्रपञ्चे सङ्गीतं शब्दं वा आकाशस्थं (Radio) शृणुमः, (Television) दूरदर्शनादिमूलकं चित्रादिकं पश्यामः तरङ्गादिद्वारा। ते च तरङ्गाः सर्वत्र व्याप्ताः एव खलु? तथापि ते सर्वदा नैव प्रत्यक्षविषयाः भवन्ति। तदर्थं माध्यमरूपेण यदा Radio, Television भवन्ति, तदैव शब्दादिकं भासते इत्यङ्गीकुर्वन्ति किल! तद्वत् भगवद्दर्शमपेक्षते चेत् मन्दिरं भवेदेव माध्यमरूपेण। न तु केवलं मन्दिरं, तत्र प्रतिष्ठितमूर्तिः च।

पुनश्च केचन वितण्डां कुर्वन्ति लौकिकाः भक्तिरेवालं कुतो देवालयः? इति। तानेवं वक्तुं शस्यते। यथा ''जलं आनय'' इति वदामः चेत् शिष्यः पात्रे जलं आनयति। तं प्रति केवलं जलमेवोक्तं, कुतो पात्रमानीतवान्? इति तर्जयामो वा? नैव। यतः पात्रं विना जलानयनम् अशक्यम्। तद्वत् भक्तिरावश्यकी चेत् भगवतः स्वरूपज्ञानमावश्यकम्। तदर्थं मन्दिरमत्यावश्यकम् पात्रवत् माध्यमरूपेण इति।

एवञ्च समाजे भक्तिजागृतेः कारणं देवमन्दिरमेव इति सर्वैः अवगन्तव्यम्। तादृशाः एव जनाः खलु यत्किञ्चिद्भक्त्युद्धाराय मन्दिरं गच्छन्ति। भक्त्युत्कर्षाय भागवत-भगवद्गीतादिकं पठन्ति। पठित्वा तत्रोक्तधर्मान् पालयन्ति - अधर्मान् त्यजन्ति। एवं कृतौ शीलाः भगवत्परिनिष्ठितमनसः भूत्वा समाजस्य श्रेयसे बहुधा चरन्ति।

तत्र पूर्वोक्तभावनाः सर्वाः स्वान्ते निक्षिप्य भक्तिजागरणाय, समाजोद्धाराय च तिरुमल तिरुपतिदेवस्थानेन आभारतम् अनेकानि मन्दिराणि निर्मीयन्ते। तथा ''गुडिको गोमात'' इत्यादिभिः कार्यक्रमैः मन्दिरवैभववर्धापनाय निरतं प्रयासः क्रियते इत्यादिविषयाः सर्वमाधवभक्तमानसतोषपोषकाः भवन्तीत्यत्र नैव संशीतिः।

**''धर्मनिलयाः धर्मप्रचारकाः देवालयाः वर्धन्ताम्''**


विवेकभ्रष्टानां भवति विनिपातः शतमुखः।



# भक्त्या भजामो हरिम्

- श्री अभिजित् श्रीकुमार्, चरवाणी - ९२४९७८२७१७

**भ**गवद्दर्शनाय जनाः अनवतरं क्षेत्रेषु (मन्दिरेषु) प्रवहन्ति। किन्तु किमर्थमिति प्रश्नः। अधुना तु भोगादीनामुपलब्ध्यर्थं वा स्वप्राराब्धनिवारणार्थं वा भगवन्तं आश्रयन्ति जनाः। केचन कथयन्ति "हे प्रभो, मह्यम् शतकोटिरूप्यकाणि यच्छतात्, अहं भवते सुवर्णहारं दास्यामि" इति। "पुत्रस्य विवाहानन्तरं नैवेद्यं समर्पयामि किन्तु प्रथमं विवाहं कारयतु, तदनन्तरमेव भगवते किमपि दास्यामि" इति। दुस्थितेः पराकाष्ठता इत्येवं ननु वक्तव्यम्! यः परमात्मा आत्मनि एव आत्मानं आत्मना शक्त्या संयच्छति पाति च तमीश्वरं तु जनाः योजकः इतिवत् मत्वा व्यवहरन्ति। मायाप्रपञ्चिते अस्मिन् संसारे किं वा स्यात् यत् भगवते रोचते निर्मलभक्त्या विना।

**पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।**
**तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः।। इति भगवद्वचनम्।९.२६।**

शुद्धबुद्धेः भक्त्या उपहृतम् अहम् अश्नामि इति भगवान् उवाच। मूढाः जनाः धनादिभिः भगवन्तं तोषयितुं वृथा परिश्रमं कुर्वन्त्येव। स च भगवान् श्रीपतिः। श्रियः पतिः लक्ष्म्याः पतिः। लक्ष्मी तु चपला एव, किन्तु भगवन्नारायणस्य पादकमलयोर्नित्यं सा सुप्रतिष्ठिता। पुनः को वा धनादिभिः भगवन्तं क्रीणातुं शक्यः। भक्तिरेव स अध्वा येन कृष्णो निलीयते। भक्ताः एव भगवतः शक्तिः, भगवदपेक्षया भक्तानामेव माहात्म्यम्। अत एव "भक्ताय धारयति मोक्षं हरिः" इत्यत्र हरेः आधमर्ण्यं विनिश्चिताः वैयाकरणाः।

अत्रायं प्रश्नः भक्तिर्नाम का? भक्तो नाम कः? इति। अयं शब्दस्तु सेवार्थकात् भजँ धातोः क्तप्रत्यये सम्पन्नः। सेवा एव भक्तिरिति। गीतायां तु भक्तः कथं वा भवेत् इति इत्थम् उक्तम्।

**अद्वेष्टा सर्वभूतानां ... समदुःखसुखः क्षमी।।१२-१३।।**
**सन्तुष्टः सततं योगी..यो मद्भक्तः स मे प्रियः।।१२-१४।।**
**स्मान्नोद्विजते लोको .... यः स च मे प्रियः।।१२-१५।।**
**अनपेक्षः शुचिर्दक्ष ... यो मद्भक्तः स मे प्रियः।।१२-१६।।**
**यो न हृष्यति न द्वेष्टि ....भक्तिमान्यः स मे प्रियः।।१२-१७।।**
**समः शत्रौ च मित्रे च ....भक्तिमान्मे प्रियो नरः।।१२-१९।।**
**ये तु धर्म्यामृतमिदं .... भक्तास्तेऽतीव मे प्रियाः।।१२-२०।।** इति।

यः सर्वेष्वपि भूतेषु नारायणं पश्यति, स एव भक्तः। सः सुखे दुःखे च यः द्वेषरागातीतः अस्ति सः भक्तः। सः सुखाद्युपल्धौ ईश्वरानुग्रह एव कारणम् इति मत्वा भजते, दुःखे अपि ईश्वरेच्छा कारणम् इति मत्वा भजते स भक्तः।

तदेवोक्तं - **दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः** इति। सर्वे तस्य मित्राणि किन्तु सः सर्वेष्वपि विरक्तः। सर्वस्मिन्नपि सन्दर्भे यः सन्तुष्टः, यस्य बुद्धिः भगवति समर्पिता, यस्मात् लोकः न उद्विजते, यः लोकाद् न उद्विजते, भयात् विमुक्तः, अमर्षात् विमुक्तः, हर्षात् विमुक्तः, देहेन्द्रियादिविषयेषु अनपेक्षः स एव भक्तः। यः इष्टप्राप्तौ न हृष्यति, यः अनिष्टप्राप्तौ न शोचति, शुभाशुभानि परित्यक्त्वा यः कर्मरतः स एव भक्तः। एवमनेकैरुपाधिभिः संलक्षितः एव भक्तशब्दगोचरीभूतः स पुरुषः।

साधनाचतुष्टयसम्पन्नः एव भक्तः इति वक्तव्यं ननु। तर्हि किमधुना कोपि भक्तः अस्ति वा न वा? अन्नमाचार्यरामानुजाचार्यप्रभृतिभिः महाभक्तैः वेङ्कटाद्रिषु संसेवितः सः ईश्वरः स्वस्य यथार्थभक्तस्य प्रतीक्षायाम् उपविशन्नेवास्ति। किन्तु पूर्वोक्तलक्षणयुक्तः भक्त एव तत्र दुर्लभः। कोटिसहस्रकनकपुष्पाणि नैव भगवन्तं तोषयन्ति, स्वस्य भक्तस्य निर्मलमनः एव तत् पुष्पं यत् भगवान् इच्छति येन च भगवान् तुष्यति। अतः अस्माभिः कर्तव्या एका एव सा प्रार्थना भगवति -

**"अविस्मृतिः श्रीधरपादपद्मयोः नित्यं**
**ददातु स हरिः करुणामयो मे"** इति ।।

# महच्चरितम्



- श्री कोम्पेल्ल कामेश्वरावधानुलु

सुद्युम्नः इति कश्चन राजा आसीत्। तस्य राज्ये शङ्ख - लिखितौ इति द्वौ सोदरौ निवसतः स्म। तौ च पर्णशालाद्वयं निर्माय नगरात् बहिः नदीतीरे आश्रमभूमिषु तपः चरतः स्म। तयोः आश्रमपरिसरभूमयः फलपुष्पलताभिः समृद्धाः आसन्। कदाचित् अग्रजः शङ्खः आश्रमात् बहिः गतवान्। तस्मिन् समये अनुजः लिखितः अग्रजस्य आश्रमे विद्यमानात् वृक्षात् सुष्ठु एकं फलं गृहीत्वा भक्षितवान्।

अग्रजः शङ्खः आश्रमं प्रति प्रत्यागमनानन्तरं वृत्तान्तं ज्ञात्वा अनुजं पृष्टवान् - भवता भक्षितं फलं भवान् कस्मात् वृक्षात् गृहीतवान् इति। अनुजः वृक्षं दर्शयित्वा समाधानम् अवदत् - एतस्मात् एव वृक्षात् फलं स्वीकृतवानासम् इति। पुनः अग्रजः शङ्खः प्रश्नं कृतवान् - अयं वृक्षः मदीयः वा? भवदीयः वा? इति। अनुजः समाधानम् अवदत् - अयं वृक्षः भवदीय एव, न तु मदीयः इति। तदा अग्रजः उक्तवान् - भवान् अयं वृक्षः न भवदीयः इति जानन् अपि मदीयात् वृक्षात् मामकं फलं मम अनुज्ञाम् अस्वीकृत्यैव गृहीतवान्। एतत् चौर्यमेव भवति खलु! अतः अस्य अपराधस्य दण्डनं भवता अवश्यमनुभोक्तव्यम्। अस्मिन् एव लोके दण्डनमनुभोक्तव्यम् अन्यथा अस्य अपराधस्य फलतया नरकं प्राप्य तत्र अधिकं दण्डनं भवता अनुभोक्तव्यं भविष्यति। अपराधिनः दण्डयितुं परिपालकः राजा एव अधिकारी। भवात् राजानं प्रार्थयतु। सः शिक्षां विधास्यति. तेन भवान् पापनिर्मुक्तः भविष्यति इति। अग्रजस्य वचनानि श्रुत्वा अनुजः लिखितः स्वीयमपराधं ज्ञात्वा महता आदरेण महत्या भक्त्या अग्रजं नमस्कृत्य दण्डनानुभवेन पापस्य प्रायश्चित्तं विधाय पापनिर्मुक्तः भवितुम् इच्छया सद्य एव राजसौधं गतवान्।

राज्ञः भृत्याः द्वारपालकाः सद्य एव लिखितस्य आगमनवार्तां राज्ञः सुद्युम्नस्य कृते निवेदितवन्तः। सुद्युम्नः एतत् श्रुत्वा अनुपदम् एव लिखितस्य समीपम् आगत्य अर्घ्यपाद्यादिभिः तम् अर्चयित्वा स्वागतं व्याजहार। आगमनकारणं च पृष्टवान्। लिखितः राज्ञे सर्वमपि स्वापराधं निवेद्य आत्मानं दण्डयितुं राजानं प्रर्थितवान्। रजा लिखितेन बहुवारं प्रार्थितः अपि तादृशं महात्मानं तपस्विनं ऋषिम् एतादृशस्वल्पापराधकारणात् दण्डयितुम् आदौ न अङ्गीकृतवान्। पुनः पुनः प्रार्थितः अन्ततः गत्यन्तराभावात् दण्डनं विधातुं निश्चित्य अत्र दण्डनं किम्? इति लिखितमेव पृष्टवान्। लिखितः हस्तद्वयच्छेदनमेव चौर्यस्य दण्डनमिति निवेदितवान्। राजा लिखितवचनानुसारेण लिखितस्य हस्तच्छेदनं कारितवान्। लिखितः प्रवहद्रुधिरबाहुद्वयः हर्षोत्फुल्लनयनः सन् अग्रजसमीपं गतवान्। अग्रजः शङ्खः दण्डितं पापनिर्मुक्तम् अनुजं दृष्ट्वा सन्तुष्य इदानीं भवान् नदीं गत्वा स्नात्वा पितृतर्पणादिकं विधाय आगच्छतु इति आदिष्टवान्। लिखितः नदीं गत्वा पितृतर्पणं कर्तुं यावत् प्रयत्नं कृतवान् तावदेव तस्य बाहुद्वयमपि हठात् पुनर्जातमासीत्। तदारभ्य तस्याः नद्याः **बाहुदानदी** इति प्रशस्तिः आगता। एतच्चरितमाकर्ण्य राजा सुद्युम्नः सपरिवारं विनीतवेषेण समस्तोपचारादिभिः साकम् शङ्खलिखितयोः आश्रममागत्य तौ विधिवत् पूजयित्वा आत्मानं चरितार्थजीवनं कृतवान्।

तौ सोदरौ धर्मशास्त्रमेकं रचितवन्तौ। शङ्खलिखितस्मृतिः इति ताभ्यां रचितस्य धर्मशास्त्रग्रन्थस्य नाम। महात्मनां चरितमेतादृशं भवति। धर्मस्य गतिः एतादृशी भवति। शिक्षास्मृतिः एवंविधा भवति। सनातनभारतीय जीवनविधानमेतादृशं भवति। अस्वीयं तृणमपि तत् स्वामिनः अनुज्ञां विना न ग्राह्यम्। तथाग्रहणम् अपि चौर्यमेव। तदपि कठिनदण्डनार्हम्।





बुभुक्षितः किं न करोति पापम्।

# श्रीनिवासमङ्गापुरम्

- श्री जे.के.व्यासराजः
चरवाणी - ८५१९८३४४३८

तिरुपतिनगरात् दश मैलुपरिमितदूरे मदनपल्लि मार्गे श्रीनिवासमङ्गापुरनामा ग्रामः वर्तते। तत्र कल्याण वेङ्कटेश्वरस्वामिनः मन्दिरं भवति। तिरुमलदिव्यक्षेत्रे विद्यमानमूर्त्तेः सकाशात् अत्र विद्यमानमूर्त्तिः दीर्घा इत्ययं विशेषोऽत्र। नारायणः श्रीनिवासः पद्मावतीम् उवाह। विवाहात् परं गिरिप्राप्तेः पूर्वं श्रीश्रीनिवासः पद्मावत्या सह अस्मिन् क्षेत्रे न्यवसत् इति अस्य स्थलस्य पुराणं ज्ञापयति।

श्रीनिवासमङ्गापुरग्रामे विद्यमानं मन्दिरं पूर्वाभिमुखम् अस्ति। महद्भूतं महाद्वारगोपुरं तेन सहैव स्थितस्य दीर्घस्य प्राकारस्य मध्ये मन्दिरं शोभते। अस्य आलयस्य निर्माणं जनमेजयराजस्य काले समभवत् इति पुराणानि वदन्ति। अथापि ताळ्ळपाक अन्नमाचार्यस्य पौत्रः चिन्नन्ननामा (चिन्नतिरुमलय्य) क्रि.श.१५४० वत्सरे अस्यालयस्य जीर्णोद्धरणं कृतवान् इत्यस्मिन् विषये शासनानि आधारभूतानि वर्तन्ते। अस्मिन् आलये श्रीवेङ्कटेश्वरस्वामी, अलमेलुमङ्गादेवी, अनन्तः, गरुडः, विष्वक्सेनः, रामानुजाचार्यः अन्नमाचार्यप्रभृतीनां विग्रहान् स्थापयामास इति शासनेन निरूपितेऽपि एते विग्रहाः सर्वे अधुना न वर्तन्ते। श्रीवेङ्कटेश्वरस्वामिनः विग्रहेण सह गर्भालयस्य पुरतः आलयसम्बन्धिन्यः उत्सवमूर्तयः, शेषशायी रङ्गनाथः, रामानुजाचार्यः, विष्वक्सेनः इत्यादीनां मूर्तयः सन्ति। श्रीनिवासमङ्गापुरग्रामः आदौ सिद्धकुहे नामा ग्रामः आसीत्। तिरुमलनायकस्य श्रीनिवासस्य आलये वेदपारायणं स्थगितम् आसीत्। विजयनगरस्य द्वितीयस्य राज्ञः देवरायस्य काले पुनरुद्धरणं वेदपारायणस्य सम्प्राप्तम्। एकस्मिन् मासे द्वौ वेदविद्वांसौ इत्येवंक्रमेण एकस्मिन् वत्सरे चतुर्विंशतिः वेदविद्वांसः वेदपारायणाय नियमिताः आसन्। तेषां जीवननिर्वहणार्थं सिद्धकुट्टे ग्रामः दत्तः इति शासनानि घोषयन्ति।

अस्य ग्रामस्य नाम केवलं 'मङ्गापुरम्' इत्येव आसीत् इत्ययं विषयः आलयस्य नाम आवेदयता विंशतिशतमानपर्यन्तं स्थितेन शिलाफलकेन ज्ञायते। अलमेलुमङ्गापुरक्षेत्रात् (तिरुचानूरुतः) इदं क्षेत्रं पृथक् इति ज्ञातुं ज्ञापयितुं च 'श्रीनिवास' इति नाम योजितम् इति तु स्पष्टम्।

अत्र अत्युन्नतप्राकारस्य मध्यभागे उन्नताधिष्ठानस्य उपरि विशालं सुन्दरं बहिर्भूतं मण्डपं द्रष्टुं शक्नुमः। तत्र मुखमण्टपे अन्तराले देदीप्यमानः गर्भगृहविशिष्टः आलयः सन्दर्शकानां सन्तोषं प्रदधाति।

किञ्च विजयनगरकालात् तत्तस्थाः चत्वारिंशत् स्तम्भाः रसिकानां चित्तापहारिणः वर्तन्ते। आलयसम्बन्धिनः मुखमण्डपस्य द्वारपादे एकं शासनं वर्तते।

स्वामिनं पश्यतः प्रणमतश्च गरुडस्य मण्डपः अस्ति। मुखमण्टपस्य अन्तः आगच्छन् भक्तः मध्ये स्थित्वा दीर्घं स्वामिनं गर्भालयस्थं द्रष्टुम् अर्हति। काले गच्छति सति कानिचित् आक्रमणानि आलयविषये प्राप्तानि। श्रीनिवासमङ्गापुरस्थं देवस्थानमिदं विंशतितमे शतमाने कैश्चित् प्रभावशालिभिः जनैः पूज्यमानं सत् सर्वकारस्य पुरावस्तुशाखयाः वशे आसीत्।

ततः तिरुमलतिरुपतिदेवस्थानसंस्थायाः अधीनं समभवत्। ततः प्रभृति नित्योत्सवः, पक्षोत्सवः, मासोत्सवः, संवत्सरोत्सवः इत्येतान् उत्सवान् पुनः सम्प्राप्य यात्रिकप्रेमि सन् प्रचलति। तिरुमलक्षेत्रे यथा श्रीनिवासस्य नित्यं कल्याणोत्सवः प्रचलति, तथा अत्रापि नित्यं कल्याणोत्सवः प्रचलमानः वर्तते। अत्र स्वामिनः अनुग्रहेण अविवाहितानां विवाहः शीघ्रमेव भवतीति विश्वासः। तादृशः कल्याणवेङ्कटेश्वरः समेभ्यः अनवरतं कल्याणं भाग्यं यच्छतु इति प्रार्थयामहे।



# आषाढशुक्ल एकादशी
# प्रथमैकादशी

- कुमारी श्रावणी रेड्डी
चरवाणी - ७०३६२३५२४९

वर्षर्तोः आस्मादेव संवत्सरस्य आरम्भ इति काचित् पद्धतिः अस्ति। तस्मादेव संवत्सरस्य ''वर्षम्'' इति नाम आगतम्। तदनुगुणेन वर्षारम्भे विद्यमाना एषा एकादशी प्रथमैकादशी इत्युच्यते। आषाढमासस्य शुक्लपक्षस्य एकादश्यां तिथौ आचर्यते इदं पर्व। एतस्य पर्वणः उपवासपर्व, महैकादशी, शयनी एकादशी इत्यपि नामानि सन्ति। प्रतिवर्षं चतुर्विंशतिः एकादश्यः भवन्ति। तथापि एषा एव प्रथमा एकादशी नाम्ना निर्दिश्यते यतः, सर्वासु एकादशीषु एषा अत्यन्तं प्रमुखा। अन्याः एकादशीः आचरितुं ये न शक्नुवन्ति तैः आषाढशुक्लैकादशी वा आचरितुं शक्यते इति नियमः। चातुर्मासस्य आरम्भः अपि अस्मादेव क्रियते। अस्याम् एकादश्याम् आहारसेवनं न कुर्यात् इति अस्माकं पुराणानि कथयन्ति। यथा नारदीयपुराणे उक्तम् एकदश्याः आचरणेन जन्मन्तरस्यापि पापानि नश्यन्ति इति :-

**यानि कानि च पापानि ब्रह्महत्यासमानि च।**
**अन्नमाश्रित्य तिष्ठन्ति सम्प्राप्ते हरिवासरे॥**

एवमेव पद्मपुराणे उक्तम् :-

**अश्वमेधसहस्राणि राजसूयशतानि च।**
**एकादश्युपवासस्य कलां नार्हन्ति षोडशीम्॥**

अश्वमेध-महराजसूयादिमहायज्ञानां फलमपि अस्य एकदाशीव्रतफलस्य षोडशे एकभाग इव भवति। महातीर्थक्षेत्राणि अपि एतत् समं फलं न यच्छन्ति। यथा उक्तम् :-

**न गङ्गा न गया भूप न काशी न च पुष्करम्।**
**न चापि वैष्णवं क्षेत्रं तुल्यं हरिदिनेन च॥**

एतत् एकादशीव्रतं स्वर्ग,मोक्षं, राज्यं, सत्सन्तानं, सत्पत्नीम्, आरोग्यम् इत्यादीनि ऐहिकफलानि अपि प्रयच्छति। एकादश्याः महत्त्वं एवम् उच्यते यथा, ''तुलायाम् एकत्र समग्रायाः पृथिव्याः दानस्य फलम्, एकत्र एकादश्याः आचरणस्य फलं स्थापितं चेत् एकादशीफलमेव अधिकं भवति'' इति गरुडपुराणस्य वचनम्।

**एकतः पृथिवीदानम् एकत्र हरिवासरः।**
**ततोप्येका महापुण्या इयमेकादशी वरा॥** इति॥

तदा तदा उपवासकरणं आरोग्यदृष्ट्या अपि अत्युत्तमम् इति उच्यते। अनेन रोगराहित्यं भवति। ''लङ्घनं परमौषधम्'' इति प्रसिद्धा उक्तिः। एवमेव

**विषया विनिवर्तन्ते निराहारस्य देहिनः।**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते॥**

इति उक्त्यनुसारं उपवासकरणं विषयाणां निवर्तनाय अपि साधनं भवति।

एतद् एकादशीव्रतम् आचर्यमाणाः दशम्याम् अपि एकभुक्तिम् आचरन्ति। भूमौ शयनं कुर्वन्ति। ब्रह्मचर्यनिष्ठा भवन्ति। मितम् अतिक्रम्य खादनं जलपानं न कुर्वन्ति। एकादश्यां प्रातः काले स्नानादिकं समाप्य शुचिर्भूत्वा नारायणस्य पूजां कुर्वन्ति। सर्वोपचारयुक्तां पूजां कृत्वा रात्रिं भगवतः कीर्तनेन भजनेन स्तुत्या वा यापयन्तः जागरणं कुर्वन्ति। एकादश्यां रात्रौ जागरणकरणेन परमपवित्रं विष्णुपदं प्राप्नुवन्ति इति उच्यते यथा,

**एकादश्यां नरो यस्तु कुरुते जागरं नरः।**
**गीतैर्नृत्यैस्तथा वाद्यैः प्रेक्षणीयैः पृथग्विधैः॥**
**स याति वैष्णवं लोकं यं गत्वा न निवर्तते।**

अनन्तरदिने द्वादश्यां प्रातः देवपूजां कृत्वा उद्यापनं कुर्वन्ति। तद्दिने अपि एकभुक्तिम् आचरन्ति। एवम् एकादशीव्रतं दशमीतः द्वादशीपर्यन्तम् दिनत्रयम् आचरन्ति। पूर्णतया निराहारं कर्तुं ये न शक्नुवन्ति ते अन्नं विना अन्यत्किञ्चित् खादितुं शक्नुवन्ति इति शास्त्रवचनम् :-

**मूलं फलं पयस्तोयम् उपभेज्यं मुनीश्वरैः।**
**न तत्र भोजनं कैश्चिदेकादश्यां प्रदर्शितम्॥**

इति नारदपुराणे उक्तम्। अस्य उद्धेश्यम् भवति एकादश्यां भोजनं विना फलं, दुग्धं, जलं वा सेवितुं शक्यते इति।

उपवासकरणे अशक्ताः अशीत्यधिकवयस्काः वा एकभुक्तिम् आचरितुम् अर्हन्ति इति बोधायनस्य अभिप्रायः। उपवासनियमस्य पालनपर्व इति नाम इत्यस्मात् एव अस्याः प्रथमैकादश्याः उपवासपर्व इत्युच्यते। सर्वेषां वर्णानाम्, आश्रमाणां जनाः शैववैष्णवादयः सर्वेपि इदं पर्व आचरितुं योग्याः। अतः सर्वे जनाः एतद् प्रथमैकादशीपर्व आचरित्वा पूर्णं फलं प्राप्नुयुः इति प्रार्थये।

# श्रीवेङ्कटेश्वरस्य घण्टावतारस्य वेदान्तदेशिकपादस्य रचना



## सुदर्शनाष्टकम्

प्रतिभटश्रेणिभीषण वरगुणस्तोमभूषण
जनिभयस्थानतारण जगदवस्थानकारण।
निखिलदुष्कर्मकर्शन निगमसद्धर्मदशन
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन।।१।।

भावार्थः - हे सुदर्शनचक्र! त्वं प्रतिकूलवर्गस्य भयङ्करः। श्रेष्ठाः गुणाः एव तवाभरणानि। जन्मजरामरणादिभिः युक्तं संसारं भीतिजनकं तारयति। लोकस्थितिकारणीभूतः, सकलपापानां निर्मोचकः, वेदोक्तधर्मदर्शकः त्वमेव। तादृशः त्वं सर्वोत्कृष्टतया जय जय!

शुभजगद्रूपमण्डन सुरजनत्रासखण्डन
शतमखब्रह्मवन्दित शतपथब्रह्मनन्दित।
प्रथितविद्वत्सपक्षित भजदहिर्बुध्न्यलक्षित
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन।।२।।

भावार्थः - जगन्मङ्गलविग्रहस्य श्रीमतः नारायणस्य अलङ्कारभूत! देवतानां भीतिनिर्मूलक! इन्द्रेण चतुर्मुखब्रह्मणा च नमस्कृत!, अथर्वणवेदसम्बद्धेन शतपथ ब्राह्मणेन संस्तुत! अहिर्बुध्न्यसंहितायां प्रतिपादितवैभवोपेत! हे सुदर्शन! जय जय! जय जय!

निजपदप्रीतसद्गण निरुपथिस्फीतषड्गुण
निगमनिर्व्यूढवैभव निजपरव्यूहवैभव।
हरिहयद्वेषिदारण हरपुरप्लोषकारण
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन ।।३।।

भावार्थः - तव चरणारविन्देषु आसक्तानां साधूनां समूहेन युक्त! स्वाभाविकैः परिपूर्णैः ज्ञान-बल-ऐश्वर्य-वीर्य-शक्तीत्यादिभिः षड्गुणैः शोभित! वेदेषु विशेषतया प्रस्तुतमहिमान्वित! आत्मीय पर-व्यूह-विभव-अन्तर्यामि- अर्चारूप पञ्चरूपयुक्त! इन्द्रविरोधिपक्षस्थनां राक्षसानां विदारक! काशीपट्टणदहनहेतो! हे सुदर्शन! जयी भव! विजयी भव!





स्फुटतटिज्जालपिञ्जर पृथुतरज्वालपञ्जर
परिगतप्रत्नविग्रह परिमितप्रज्ञदुर्ग्रह।
प्रहरणग्राममण्डित परिजनत्राणपण्डित
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन।।४।।

भावार्थः - प्रकृष्टकान्तियुतकनकवत् शोभायमानवर्णयुक्त! बृहत्तराग्निज्वालासु अपि शोभायमान! सनातनरूपविशिष्ट! कुशाग्रमतिभिः अपि सम्यक् ज्ञातुम् अशक्य! आयुधसमूहेन समलङ्कृत! आश्रितजनरक्षणे समर्थ! हे सुदर्शन! जय जय! जय जय!





भुवननेतस्त्रयीमय सवनतेजस्त्रयीमय
निरवधिस्वादुचिन्मय निखिलशक्तेजगन्मय।
अमितविश्वक्रियामय शमितविश्वग्भयामय
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन।।५।।

**भावार्थः** - लोकत्रयस्य नेत्ररूप! ऋक् - यजुः-सामस्वरूप! यज्ञयागादिषु आराध्यमानगार्हपत्य-आहवनीय-दक्षिणाग्निरित्याकारकाग्नित्रयस्वरूप! अपरिमित भोग्यात्मकज्ञानस्वरूप! सर्वविध सामर्थ्यविशिष्टविग्रह! जगद्रूपात्मक! संसारनामक रोगनाशन! हे सुदर्शन! जयी भव! विजयी भव!



प्रतिमुखालीढबन्धुर पृथुमहाहेतिदन्तुर
विकटमालापरिष्कृत विविधमायाबहिष्कृत।
स्थिरमहायन्त्रयन्त्रित दृढदयातन्त्रयन्त्रित
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन।।७।।

भावार्थः - दक्षिणपादं पुरस्तात् प्रसार्य वामपादं पृष्ठतः सारयामः चेत् प्रत्यालीढ इति बन्धः भवति। तादृशप्रत्यालीढबन्धेन मनोहर! महत्तरायुधैः व्याप्त! विविधमायामयस्वरूप! विकटमायाबहिष्कृत! बहुविधमालाभिः सम लङ्कृत! अविचाल्ये श्रेष्ठयन्त्रे प्रतिष्ठितमहद्रूप! दृढतरकृपानामकतन्त्रेण सज्जनैः वशीकृत! श्री सुदर्शन! जयोऽस्तु तव। विजयोऽस्तु तव।

दनुजविस्तारकर्तन दनुजविद्याविकर्तन
जनितमिस्राविकर्तन भजदविद्यानिकर्तन।
अमरदृष्टस्वविक्रम समरजुष्टभ्रमिक्रम
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन।।८।।

भावार्थः - राक्षसप्राचुर्यच्छेदक! असुरमायायाः निःशेषनाशक! संसाररूपान्धकारयुक्तनिशायाः सूर्यसदृश! भक्तानां अज्ञानस्य परिपूर्णनाशक! देवताभिः अवलोकितस्वकीयपराक्रमविशिष्ट! रणरङ्गेषु चित्र विचित्रविहारचेष्टायुक्त! हे सुदर्शन! जयी भव! विजयी भव!

महितसम्पत्सदक्षर विहितसम्पत्षडक्षर
षडरचक्रप्रतिष्ठित सकलतत्त्वप्रतिष्ठित।
विविधसङ्कल्पकल्पक विबुधसङ्कल्पकल्पक
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन।।६।।

भावार्थः - प्रशस्तज्ञानसम्पदा युक्तानां आश्रितानां मोक्षस्वरूपभूत! सकलैश्वर्यदायकषडक्षरयुक्तेन (सहस्रार हुं फट्) मन्त्रेण उपासित! षट्कोणयुक्तचक्रे सान्निहित स्वरूप! नानाविधानां कामानां कल्पवृक्षसदृश! (कल्पवृक्षवत् कामितार्थप्रदायक!) देवतानां आकाङ्क्षायाः प्रपूरक! श्री सुदर्शन! जयी भव! विजयी भव!

द्विचतुष्कमिदं प्रभूतसारं
पठतां वेङ्कटनायकप्रणीतम्।
विषमेऽपि मनोरथः प्रधावन्
न विहन्येत रथाङ्गधुर्यगुप्तः।।९।।

भावार्थः - श्रीवेदान्तदेशिकैः अनुगृहीतं, विशिष्टसारगर्भितम् इदं सुदर्शनाष्टकं ये पठन्ति, तेषां भक्तानां मनः पूर्वम् अप्राप्यविषयेषु प्रवृत्तं चेदपि श्रीसुदर्शनेन आरक्षितं सत् पुनरुज्जीवति।

इति श्री वेदान्ताचार्यस्य कृतिषु
सुदर्शनाष्टकम् ।।

अस्य सुदर्शनस्य अनुग्रहेण सुदर्शनाष्टकपाठकाः सकलाभीष्टम् अवाप्नुवन्ति।



# हरिदासवाङ्मये श्रीवेङ्कटाचलाधीशः

तेलुगुमूलम् - सुस्वरं नागराजाचार्युलु
संस्कृतानुवादः - डा.गङ्गिशेट्टि लक्ष्मीनारायणः
चरवाणी - ९४९४२४८३४८

(तदनन्तरम्)

**कादोद कविमलकस्तूरि कम्मेणे.... परमपुरुषा एळु**

भवतः सेवकाः सर्वे उष्णजलं कस्तूर्यादिसुगन्धद्रव्याणि, सुगन्धतैलं, दर्पणं, सुवर्णपीठीः, पादुके, पीताम्बराणि, सौन्दर्याभरणानि च स्वीकृत्य भवतः स्वर्णद्वारस्य पुरतः दण्डायमानाः सन्ति। हे आदिहरे! परमपुरुष! भक्तजनसंरक्षक! उत्तिष्ठ!

**गोत्रारि हरिधर्म पुण्यजनवरुण... धात्रि कळत्रदेवा** इन्द्र-अग्नि-धर्मज-वरुण-वायु-कुबेर-निर्ऋति-ईश्वर-सूर्यादि देवताः सपरिवारं वाहनारूढाः सन्तः समागताः। एवमेव मैत्रावरुण-जमदग्नि-कश्यप-विश्वमित्र-भारद्वाज-सनक-नारदादिमहर्षयः हे स्वामिन्! अन्यथा शरणं नास्ति त्वमेव शरणं हे धात्रीरमण! इति स्तोत्रं कुर्वन्ति। हे भक्तजनसंरक्षक! उत्तिष्ठ!

**नित्य एळुव समयमीरितु इंदीग..........सच्चिदानन्दात्मका**

भवतः उत्थानसमयः अतिक्रान्तः। अद्य भवान् एतावता न उत्थितवान् इत्युक्तौ भवतः पत्नी श्रीदेवी रतिक्रीडायां भवन्तं मन्त्रमुग्धं कृतवती वा? किं कारणं स्वामिन्! एतादृशी निद्रा का? अस्माकं प्रार्थना न श्रूयते वा? साम्प्रतं या महापदवी तव निकटे वर्तते तद पेक्षया उन्नता अन्या महापदवी कापि प्राप्ता वा? न ज्ञायते! हे सच्चिदानन्द! भक्तजनसंरक्षक! उतिष्ठ!

**निद्र गेवेहाकदिरु........ हासिकिंद एळु।।**

अस्मिन् कीर्तने विजयदासवर्याः भगवति श्रीवेङ्कटेश्वरे दशावतारान् दृष्ट्वा गानं कृतवन्तः।

हे स्वामिन्! निद्रा मास्तु (मत्स्यावतारः), जले भाव्यम् (कूर्मावतारः), भूदेव्यै विश्रान्तिं प्रयच्छतु (वराहवतारः), कश्यपस्य सुतं हिरण्यकशिपुं मारय! (नृसिंहावतारः), सागरराणीं प्राप्नोतु (वामनावतरः), राज्ञः दण्डयतु (परशुरामावतारः), अङ्गुलीयकं भूपुत्र्यै प्रेषयतु (रामावतारः), गिरिं धरतु! (कृष्णावतारः), कलिदुष्कृत्यान् दूरीकरोतु (कल्क्यवतारः) हे वेदस्तवनीय! भद्रमारुते! वेङ्कटविजयविठल! शेषतल्पात् उत्तिष्ठ! एवंरूपेण विजयदासवर्याः गीतवन्तः।

विजयदासवर्याः केषाञ्चन भक्तानां नामानि वदन्तः, ते तुभ्यं कीदशं साहाय्यं कृतवन्तः, भवान् तान् आपत्समयेषु रक्षितवान्। तैः किं कृतं मया किं न कृतम्? 'हे स्वामिन् तव **मुखं दर्शयतु' इत्येवं प्रार्थयन्ति।**

**भकुत प्रह्लाद निनगेनु तंदित्त**
**शुकमुनि निनगेनुपकारमाडिद**
**सुख बडिसिदने नारद बंदु अनुदिन।**
**रुकुमांगद तृप्तिबडिसिदनिनगेनु।**
**शिखर वेत्तिद नेनो लंकाधीशनु बंदु।**
**मखमाडोदक्के धन वित्त ने नरपुंड-**
**रीकनु, निनगे एरुवरथ वित्तने।**
भकुति घळिसि हाकि दनेनो धृवशौ -
**नक मिगिलादवरेनु माडिदरु**
**भकुति इद्दनितु भजिसिदरल्लदे**
**अकटनिनगोब्बने नानादवनु**
**लकुमिरमण नम्म विजयविठल राय**
**मुखवा तोरु एन्न भकुति इद्दु नितू।।**

(अनुवर्तिष्यते)

भागः -१४

# भगवद्गीता

तेलुगुमूलम् - श्री कुप्पा विश्वनाथशास्त्री
संस्कृतानुवादः - बि.गिरीशकुमारः
चरवाणी - ९९८९६५७५७६



(तदनन्तरम्)

"मननात् त्रायते इति मन्त्रः" नाम, यो विषयः पुनः पुनः हृदि मननात् अस्मान् त्रायते = रक्षति, सः मन्त्रः इति अभिधीयते। सः मन्त्रः उक्तविषयानेव मुहुर्मुहुः प्रतिपादयति। यतो हि - सः विषयः हृदि स्थिरेण भवतु इति। एवम् आत्मस्वरूपम् स्थिरं भवतु इति भवतु इति। एवम् आत्मनः स्वरूपमपि स्थिरेण आत्मस्वरूपमधिकृत्यैव बहुधा वदति मन्त्रः। तन्मात्रेण पुरुक्तिः दोषाय न भवति, अपि तु गुण एव। अतः परमात्मा पौनःपुन्येन आत्मानं नित्य इति अविनाशीति प्रतिपादितवान्। किन्तु सर्वत्रापि एकैकः विशेषः अस्ति येन सन्देहनिवृत्तिः भवति। "एनम् अविनाशी इति वेद" इति उक्तवान्। तत्र आत्मा अविनाशी इति निरूपणीयः चेत् देहेऽस्मिन् जायमानानां क्रियाकलापानां कर्ता नाऽहमस्मि। यद्यत् भवति तत्सर्वमपि देहसंबद्धमेव, देहे एव जायते। न तेन मया कश्चन संबन्धः विद्यते। अहं शुद्धः इति ज्ञातव्यम्। उक्तः विषयः बुद्धौ प्रतिफलितो वा न वा इति ज्ञातुं पृच्छति "कं घातयति हन्ति कम्?" इति।

आत्मनः विषये उक्तानि विशेषणानि "अविनाशी" "नित्यः" इत्यादीनि दृढीकर्तुं पुनः रीत्यन्तरेण अवगमयति "वासांसि" इत्यनेन।

"वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णा -
न्यन्यानि संयाति नवानि देही।।(२-२२)

देहिनः शरीरलाभात् कश्चन जात इति, शरीरनाशात् कश्चन मृत इति चिन्तयन्ति जनाः। किन्तु, तन्न यथार्थम्। यतो हि यथा जनाः मलिनलिप्तानि उत जर्जरितानि वस्त्राणि विहाय= त्यक्त्वा नूतनानि वस्त्राणि धरन्ति, तद्वदेव असौ देही अपि जरया पीडितानि, जीर्णावस्थां प्राप्तानि शरीराणि विहाय नूतनशरीराणि धरति। तन्मात्रेण अयं देही अन्यः इति वक्तुं न शक्यते। एवं देहानाम् अनित्यत्वप्रतिपादनपूर्वकं देहिनः नित्यत्वं ज्ञापितवान्। एवं सर्वत्रापि पौनरुक्तेः सत्त्वेऽपि तत्र कश्चित् विशेषांशं ज्ञापयति।

ननु श्रीकृष्णेन यदुक्तं देहिनः नित्यत्वं, देहानां अनित्यत्वं तत्तु सत्यमेव। किन्तु वास्तविकतया चिन्तयामः चेत् अस्माकं एषु देहेषु एव अत्यन्तं स्नेहः दृश्यते। न केवलं अस्मासु, ये अस्माकं प्रियजनाः बान्धवाः तेषामपि देहेषु अनिशयेना स्नेहः दृश्यते। तस्मादेव कारणात् यदा ते स्वदेहं त्यजन्ति (मृताः भवन्ति) तदा अत्यन्तं दुःखम् अनुभवामः खलु! इति चेदाह "वासांसि जीर्णानि" इति।

(अनुवर्तिष्यते)



# वागर्थाविव संपृक्तौ- अद्वैतवेदान्तः

- डा.माडुगुल अनिल् कुमार्
चरवाणी - ९६४०३२९५६५

भारतदेशः अत्यन्तप्राचीनः। अत्र स्थिता संस्कृतिः न केवलं भारतदेशे अपि तु यावत्प्रपञ्चे आदर्शप्राया भवति। अस्माकं देशे बहवः मतावलम्बिनः प्रवर्तकाः विविधवेदान्त व्यवस्थापकाश्च भवन्ति। तादृशेषु अद्वैत वेदान्त व्यवस्थापकाः श्रीमादादिशङ्करभगवत्पादाचार्याः अन्यतमाः।

आत्मा स्वयंप्रकाश इति, अजरामर इति श्रीमदादिशङ्कराचार्यस्य सन्देशः।

तदेव -

**देहोहमित्येव जडस्य बुदधिः देहे च जीवे विदुषस्त्वहंधीः।**
**विवेकविज्ञानवतो महात्मनो ब्रह्माऽहमित्येव मतिस्सदात्मनि।।**

- विवेकचूडामणिः. १६२

इति श्रीमदादिशङ्कराचार्यः व्याजहार। एवं ऋग्वेदीय ऐतरेयोपनिषदः - "प्रज्ञानं ब्रह्म", यजुर्वेदीय बृहदारण्यकोपनिषदः - "अहं ब्रह्मास्मि", सामावेदीय छान्दोग्योपनिषदः - "तत्त्वमसि", अधर्ववेदीय माण्डूक्योपनिषदः - "अयमात्मा ब्रह्म" इति चत्वारि महावाक्यानि स्वीकृत्य जीवब्रह्मणोरैक्यं प्रतिपादय् "जीवो ब्रह्मैव नाऽपरः" "ब्रह्म सत्यं जगन्मिथ्या" इति श्रीमदादिशङ्कराचार्यः अद्वैतमतं व्यवस्थापयामास। "ब्रह्म सत्यं जगन्मिथ्या, जीवो ब्रह्मैव नापरः" इत्यस्मिन् वाक्ये एव शङ्करभगवत्पादस्य वेदान्तस्सर्वोऽपि विद्यते। अस्मिन् देहे कर्तृत्वेन भोक्तृत्वेन च दृश्यमानः अयं प्रसिद्धः जीवः निरुपाधिकदृष्ट्या ब्रह्मैव। संसारहेतुनिवृत्तिः, जीवब्रह्मणोरैक्याताासाधनमेव मोक्षविद्या। जीविनः ब्रह्मज्ञानादेव मोक्षप्राप्तिर्जायते। अत एव "ब्रह्मविद् ब्रह्मैव भवति" इति श्रुतिरुच्यते।

**यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद् ब्रह्मेति।।**

- तैत्तिरीयोपनिषत् ३.१.३.

तैतिरीयोपनिषदः अयं मन्त्रः ब्रह्मणः लक्षणमेतदेवेति एवं उपदिशति। समस्तमिदं जगत् यस्मादुत्पद्यते. येनैव जीवति, यस्मिन्नेव च लीयते तदेव ब्रह्म इति। अयमेव अद्वैतमतसारः।

**त्वं स्त्री पुमान् असि त्वं कुमार उत वा कुमारी।**
**त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः।।**

- श्वेताश्वतरोपनिषत्

इत्यनेन श्लोकेन परमात्मा एव जीवात्मना अवतरति इति श्वेताश्वतरोपनिषदा ज्ञायते।

वाङ्मये साहित्यस्य असाधारणं गौरवमस्ति। साधारणजनैः वेदवेदान्तविषयाः अवगन्तुं न शक्यन्ते। तदसाधारणज्ञानं साहित्ये कान्तासम्मिततया वक्तुं शक्यन्ते। रघुवंशमहाकाव्यम् महाकवि कालिदास विरचितम्। कालिदासोऽतिमानुषप्रज्ञाशालीति जनश्रुतिरपि श्रूयते। सरस्वत्येव शापवशाद्भूलोके पुंरूपेणाविर्बभूवेति केचन पण्डिताः विश्वसन्ति। संस्कृते पञ्चमहाकाव्येषु कालिदास कृत रघुवंशमहाकाव्यस्य विशिष्टं स्थानमस्ति।

रघुवंशमहाकाव्ये अनेकत्र श्लोकेषु अद्वैतवेदान्तः दृश्यते। परन्तु मङ्गलाचरणश्लोकः अत्यन्त प्रसिद्धिमवाप्तत्वात् अस्मिन् श्लोके एव विद्यमानं अद्वैतवेदान्ततत्त्वम् दिङ्मात्रमुदाह्रियते।

रघुवंशमहाकाव्ये यावतो रसपरिपाकस्य निर्वाहोऽस्ति सोऽन्येषां काव्येषु न दृश्यते। अतः कालिदासस्मरणेनैव रघुवंशमहाकाव्यम्, तस्मिन् ''वागर्थाविवसम्पृक्तौ'' इति श्लोकश्च अस्माकं मनसि स्फुरति। अधुना तदेव प्रार्थनात्वेन सर्वत्र स्वीक्रियते।

**वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये।**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥** - र.वं.१.१.

शब्दार्थयोः अभेदः सम्बन्धो भवति । सर्वे शब्दाः सार्थकाः भवन्ति। यथा शब्दार्थौ परस्पराभ्यां न पृथक् पृथक् विधानेन भूत्वा सर्वदा परस्पर नित्यसम्बद्धौ भवतः तथा पार्वतीपरमेश्वरौ अपि परस्परं अपृथक्त्वेन भवतः। तस्मात् कारणात् शब्दार्थज्ञान सम्पादनार्थं शब्दार्थाविव नित्यं सम्मिलितौ जगतः पितरौ पार्वतीपरमेश्वरौ वन्दे।

**शब्दजातमशेषंतु धत्ते शर्वस्य वल्लभा।**
**अर्थस्वरुपमखिलं धत्ते मुग्धेन्दुशेखरः॥**

इति वायुपुराण संहितावचनबलाद्विशिष्टशब्दार्थज्ञानं विना काव्यनिर्माणं दुष्करमिति मत्वा, विशिष्टशब्दार्थौ पार्वतीपरमेश्वराधीनाविति सम्यक् ज्ञानसम्प्राप्त्यर्थं कविः पार्वतीपरमेश्वरौ नमस्करोति। स्वरचनायाः अप्रतिहततत्त्वज्ञानार्थं कविकृत ईश्वरप्रार्थना तेजस्वती, रसवती, अर्थवती च भवति। अपृथक् सिद्धवागर्थावनपेक्ष्य अर्धनारीश्वररुपे एकत्वप्रतिपादनस्य कृतत्वात् देवतास्तुतिरत्यन्तं रमणीयऽभूत। अनेन प्रकृतिपुरुषभावं जगत्पितरौ व्यक्तमकुरुताम्। एतदेव अद्वैतम्।

तथैव अस्मिन् श्लोके परिशील्यमाने पार्वतीदेवी जीवात्मा। परमेश्वरः परमात्मा। वागर्थाविव संपृक्तौ इत्यत्र परब्रह्मणि संयोगं प्रकटयति। एवं जीवात्मपरमात्मनोः समैक्यं च अद्वैतम्। केवल ब्रह्मज्ञानी एव एवं वक्तुं शक्नोति।

**प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभवापि।**
**विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्॥**- भ.गी.१३.२०

इत्युक्तत्वात् अग्नौ दाहकशक्तिरिव पुरुषात्प्रकृतिरभिन्ना। तथा वागर्थावप्यभिन्नौ।

''औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध इति वागर्थयोर्नित्यसम्बन्धित्वं प्रसिद्धम्'' - इति चित्रमीमांसायामस्ति। एवं वागर्थौ नित्यसम्बद्धौ।



''वागर्थौ नित्ययुतौ परस्परं शिवशक्तिमयावेतौ'' (कामकलाविलासः, १२)

इति मन्त्रशास्त्रे वागर्थयोर्नित्यसम्बन्धः शिवशक्तिमयत्वेन निरुपितः। एतदेव -

**शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं**
**न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि।**
**अतस्त्वामाराध्यां हरिहरविरिञ्चादिभिरपि**
**प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति॥** - सौन्दर्यलहरी.१.

इति श्री शङ्करभगवत्पादाः सौन्दर्यलहर्यामपि आरम्भश्लोके वर्णयामासुः। शिव एव शक्त्या युक्तः सृष्टेः सञ्चालनं करोति। पार्वतीं विना शिवः तत् कर्म कर्तुं न शक्नोति। एतत्सर्वपदार्थमूलभूत प्रकृतिः पुरुषश्च परम्ब्रह्मेति एक एव।

''पार्वतीपरमेश्वरौ वन्दे'' इत्यत्र ''पार्वतीप + रमेश्वरौ'' इति पदविभागे कृते सति कालिदासस्य लौकिकत्वं, हरिहराद्वैतत्त्वं, शैववैष्णवमतयोः समदृष्टिश्च ज्ञायते। एवमेव आवयोर्जगदात्मत्वात् तादात्म्यं चावयोरपि। तादात्म्यादावयोर्नित्यं जगत्प्राणा वुभावपि॥ (रघु.व्या.) इति अभियुक्तिरप्यस्ति। तस्मात् तौ पार्वतीपरमेश्वरौ जगतः मातापितरौ। तथैव शब्दो नित्यः। स एव परब्रह्म सर्वरुपश्चेति परिज्ञानप्राप्तये तदधिदेवता स्वरुपमर्धनारीश्वर दैवतं परिज्ञाय तदनुग्रह प्राप्तये प्रयतितव्यमिति महाकवेः कालिदसस्योपदेशः।

अनन्तरं विचार्यमाणे पार्वतीपरमेश्वरयोः शब्दार्थाभ्यां सादृश्यं प्रदर्शितत्वात् उपमालङ्कारः विलसति। अनेकैः कविभिः उपमालङ्कारः स्वेषु काव्येषु उपयुज्यते। परन्तु कालिदासस्य उपमालङ्कार प्रयोगे या शोभा वर्तते तदन्येषां कवीनां न साध्यते। अत एव कालिदासः ''उपमा कालिदासस्य'' इति प्रसिद्धिमवाप।



नीतिकथा

# पूज्यपूजाव्यतिक्रमः न श्रेयसे

- श्रीमती विजया भट्

पुरा कुलाचलाश्रमे इन्द्रद्युम्नामकः कश्चन पाण्ड्यराजः बभूव। एकदा विष्णुव्रतपरायणेन इन्द्रद्युम्नेन आराधनकाले मौनव्रतः गृहीतः तस्मिन् समये एव आतिथ्यकाम्येन महायशसा अगस्त्यमुनिना तत्र उपस्थितम्। हरिसेवोत्केन इन्द्रद्युम्नेन मुनिः न लक्षितः। देवैस्तुल्यान् विप्रान् नावगणयेत् कदापि इति नियमः।

तूष्णीं पूजातत्परम् अकृतार्हणम् इन्द्रद्युम्नं वीक्ष्य क्रुद्धेन कुम्भोद्भूतिना उपास्यमानः इन्द्रद्युम्नः शप्तः -- **''दुरहङ्कारी त्वं स्तब्धमतिः हस्ती भव''** इति।

एवं शापग्रस्तः इन्द्रद्युम्नः गजेन्द्रनामकः कश्चन गजो भूत्वा क्षीराम्बुधेः मध्यभागे त्रिकूटनाम्नि पर्वते न्यवसत्। तत्र गजेन्द्रः अन्यैर्यूथैः साकं सन्तोषेण क्रीडन् स्वस्य बलिष्ठत्वं प्रदर्शयन् जीवति स्म।

अथैकदा परुषातपे तृषार्तः गजेन्द्रः समीपस्थं सरोवरं प्रविश्य निकामं जलं पीत्वा अन्याभिः हस्तीनीभिः सह तत्रैव क्रीडति स्म। तावता दुर्मदस्य गजस्य पाददेशः यदृच्छया केनचिद् दैवचोदितेन मकरेण गृहीतः। गजेन्द्रः यताशक्ति विमोचनार्थं प्रयत्नमकरोत्। तदा आर्तं यूथपतिं दृष्ट्वा तस्य विमोचनार्थम् अन्यैः करिभिः हस्तिनीभिः च अयत्यत। परन्तु तैः कृताः समे प्रयत्नाः विफलाः अभवन्। गजेन्द्रः मकरेण सह सहस्रं समाः नियुध्यते स्म।

गच्छता कालेन गजेन्द्रस्य मनोबलः अपि क्षीणः जातः। यद्यपि गजेन्द्रः भृशं प्रयत्तवान् विमोचनं तु न प्राप्तं तेन।

अन्ते सः चिन्तितवान् - **''दैवेनैव ग्राहरूपेण पाशेन अहं बद्धः। भगवतः प्रार्थनां करोमि''** इति। एवं चिन्तयित्वा सुकृतफलमिव शुण्डैः पुण्डरीकमेकं हरये समर्पयतः आर्तस्य गजेन्द्रस्य मुखात् ''नारायणाखिलगुरो भगवन्नमस्ते'' इति हरिनामस्तुतिः निरगच्छत्।

अहो भगवन्नामाक्षरवैभवम्! भक्तप्रेमी श्रीहरिः झटिति ताक्ष्यारूढः सन् गजस्य पुरतः आविर्भूतः। सः चक्रेण मकरं विदार्य गजेन्द्रं वैकुण्ठं प्रति नयति स्म।

मार्गे तस्य पूर्वजन्मवृत्तान्तं श्रावयित्वा श्रीहरिः गजेन्द्रमुक्तवान् -- ''यः मकरः सरोवरे तव पादं गृहीतवान् सोऽपि पूर्वजन्मनि हूहू नामकः कश्चन गन्धर्वराजः आसीत्। सोऽपि देवलमुनेः अपमानं कृत्वा मकररूपं प्राप्तवान्। यः प्रगे एतत् वृत्तान्तं गायेत् मम रूपाणि स्मरेत् सः श्रेयसे स्यात्'' इति।

तस्मात् आरभ्य अयं वृत्तान्तः गजेन्द्रमोक्षः इति नाम्ना सुप्रसिद्धः जातः।

**''प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः''**





# पितः! व्याघ्रः

तेलुगु मूलम् - डा.कंपल्ले रविचन्द्रन्
चित्राणि - तुम्बलि शिवाजी
संस्कृतानुवादः - श्री राघवेन्द्र राव्
चरवाणी - ६३०२३७१०२५

1 एकस्मिन् ग्रामे सोमय्यनामकः कृषीवलः अस्ति। तस्य एकः अजसमूहः वर्तते। एकदा तं नीत्वा क्षेत्रं गच्छन् स्वपुत्रं रङ्गम् अपि समूहस्य रक्षणाय नीतवान्।

2 हे रङ्ग! अत्र यदा कदापि एकः व्याघ्रः आगच्छति। सावधानेन तिष्ठ! एवं व्याघ्रः आगच्छति चेत् उच्चैः आह्वय, अहं क्षेत्रात् आगच्छमि।

3 आम् पितः!



4 साक्षात् व्याघ्र आयाति वा? आयाति चेत् पिता आगच्छति वा? परीक्षां करोमि।

5 पितः व्याघ्रः! बिभेमि। व्याघ्रः अजान् खादति। शीघ्रमागच्छ पितः!

6 व्याघ्रः व्याघ्रः इत्यवदत् खलु! कुत्र रङ्ग! व्याघ्रः?

7 रङ्गः विकटाट्टहासं कुर्वन्...

8 व्याघ्रः नास्ति, किमपि नास्ति। वृथा कोलहलार्थम् आहूतवान्।

9 किमेषा धूर्तता तव! कियान् उद्विग्नः अभवं जानासि वा? तव चेष्टातः क्षेत्रे कार्यं सर्वं स्तब्धम्। गच्छमि।

10 गच्छतु... गच्छतु... भवता साकं क्रिडामि...

11 सोमय्य किञ्चित् दूरं गतवान्।

12 पितः! व्याघ्र आगतः। पितः व्याघ्र आगतः। अस्माकम् अजान् खादति। अहं बिभेमि। आगच्छ पितः! आगच्छ!



न हि सर्वः सर्वं जानाति।


13 सोमय्य पुत्रस्य आर्तनादं श्रुतवान्।
14 अहो! किमेतत्? इदानीमेव आगतवान्... तन्मध्ये एवं वा...
15 आम् अगच्छामि
16 सोमय्य झटिति समूहस्य समीपं गतवान्...
17 व्याघ्रः कुत्र?
18 हा... हा... हा... हा...
19 व्याघ्रो वा? व्याघ्रः नास्ति, किमपि नास्ति। वृथा परिहासं कृतवान्। हा.. हा...
20 सोमय्य बहु क्रोधेन अवदत्...
21 धूर्त! अतीव कोलाहलं कुर्वन्नसि। मम क्षेत्रीयकार्यस्य भङ्गः तव परिहासाय वा? अचिरात् बहुधा असत्यं वदन्नसि। अस्तु! अहं क्षेत्रं गच्छामि।
22 सोमय्य गतवान्। अनन्तरं सत्यतया व्याघ्र आगतवान्।
23 रङ्गः प्राणभयेन वृक्षं आरूढवान्। व्याघ्रः अजम् अनयत्।
24 पितः! व्याघ्रः अस्माकम् अजं भुक्तवान्। रक्ष माम्.. रक्ष माम्...
25 अहं तव वचः न विश्वसिमि धूर्त!... न विश्वसिमि... इति वदन् न तम् अगच्छत्।
26 क्षेत्रकार्यं समाप्य अगतः सोमय्य पश्चात्तापयुक्तः अभवत्। रङ्गः अपि असत्यस्य परिणामः कीदृश इति अवगतवान्।
27 पितः! प्राणे गच्छति सत्यपि असत्यं न वदिष्यामि।
स्वस्ति
अग्रिमसंचिकायां श्रीवेङ्कटेशस्य दिव्यलीलाविलासान्तरं दृष्ट्वा धन्याः भवेम...





अस्य चित्रपटस्य रञ्जनं कुर्मः वा?



प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?




# रसप्रश्नाः

१. विश्वामित्रस्य यज्ञघातुकौ कौ?

२.विश्वामित्रस्य आश्रमस्य नाम किम्?

३. ताटकायाः भर्तुः नाम किम्?

४. ताटक्यै शापं कः दत्तवान्?

५.जनकमहाराजस्य आस्थानपुरोहितः कः?

६. जाह्नवी का?

समाधानानि - १. मारीचसुबाहू २.सिद्धाश्रमः ३. सुन्दः४. अगस्त्यः ५. शतानन्दः ६. गङ्गा













Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Published at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507. Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.




## ओडिशाराष्ट्रिय-भुवनेश्वर् नगरे ति.ति.दे. पक्षतः निरूढस्य श्री वेङ्कटेश्वरस्वामिनः आलयस्य महासम्प्रोक्षणदृश्यानि।










ति.ति.दे. पक्षतः २५.०५.२०२२ दिनाङ्के श्री 'हनुमज्जयन्ती' पर्वदिनस्य उत्सवाः सवैभवम् आचरिताः। अस्मिन् सन्दर्भे तिरुमल-आकाशगङ्गाप्रदेशे श्री अञ्जनादेवी-श्री बालाञ्जनेयस्वामिभ्यां ति.ति.दे. कार्यनिर्वहणाधिकारिणः श्री ए.वी.धर्मरिड्डि ऐ.डि.इ.एस्., महाभागाः पीताम्बराणि समार्पयन्।









SAPTHAGIRI (SANSKRIT) ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 20-06-2022 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal Regd. No. TRP/154/2021-2023"
LICENCED TO POST WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2021-2023"
Posting on 5th of every month.

विष्णुर्लोकैकसोपानं सर्वदुःखैकनाशनम्।
सर्वैश्वर्यप्रदं नृणां सर्वमङ्गलकारकम्
(ब्रह्माण्डपुराणम्)